यस्य सङ्ग्रामशौण्डत्वं शासन्ते बाहुशालिनः।
शसन्ते सद्गुणा नित्यं शसन्ति च सुरालयम् ॥१०१॥
भक्षयन्तोऽपि भक्षन्ते मांसं भक्षन्ति शोणितम्।
यत्खड्गखण्डिताङ्गानां शत्रूणां कौणपा रणे ॥ १०२ ॥
यस्तु लालयते बन्धून् लालयत्यखिलाः प्रजाः।
उल्ललन्ति यमालोक्य ललनानां मनोरथाः ॥ १०३ ॥
त्रुटति द्विषतां दर्पं तेषां खड्गश्च त्रोटति।
यो त्रोटयति राष्ट्रेषु तत्कीर्त्योऽमरमण्डपान् ॥ १०४ ॥
युधि व्यथति शत्रूणामश्वान् मृषति वारणान्।
मनुष्यैः पुनस्तस्य नैकोऽपि म्रियते नरः ॥ १०५ ॥
त्रसन्ति यवनो यस्मात् त्रसन्ति परदारगाः।
यस्त्रासयति निःशीलान् यत्नेन परदारगान् ॥ १०६ ॥

बाहुशालिनः वीरपुरुषा इत्यर्थः, यस्य संग्रामशौण्डत्वं, रणपाण्डित्यं, शासन्ते प्रशंसन्ति। शसन्ते सर्वत्र प्रचरन्ति। शसन्ति गच्छन्ति ॥ १०१ ॥

कुणपः शवः तदाहारेण विद्यतेऽस्य इति कौणपः राक्षसः ॥ १०२ ॥

बन्धून् लालयते लिप्सते, सुहृत्स्वजनान् कामयत इत्यर्थः। लालयति उपसेवते, पालयतीत्यर्थः। यं राजानम्, आलोक्य दृष्ट्वा, ललनानां नारीणां, मनोरथाः कामाः, उल्ललन्ति क्षुभिता भवन्ति, अतिकमनीयाकृतेस्तस्य दर्शनेन कामिनीजनहृदयेषु तदा कामवेदना जायन्त इति भावः ॥ १०३ ॥

द्विषतां शत्रूणां, दर्पम् अहङ्कारं, त्रुटति चूर्णयति हरतीति यावत् ॥ १०४ ॥

व्यथति हन्ति, हिंसार्थकव्यथधातोः प्रयोगः। वारणान् गजान्, मृषति हन्ति, हिंसार्थकतौदादिकमृषधातोः प्रयोगः ॥ १०५ ॥

क्षयति प्रत्यहं पापं क्षायति द्विषतां कुलम् ।
यशः क्षियति रोदस्योर्यस्य धर्मरतात्मनः ॥ ११२ ॥
द्रव्यं जोडयति शिष्टेषु मनं तेषां च जोडति ।
तानत्युज्ज्वलतापघ्नान् भक्त्येव जुडत्यसौ ॥ ११३ ॥
धनं राध्नोति विप्रार्थं व्यञ्जनानि च राध्यति ।
यत्प्रसादात्मनः सर्वः सततं राध्यति श्रिया ॥११४॥
यो मोषति परद्रव्यं तस्य मुष्णाति यः शिरः ।
मुष्णात्यपहृतार्थानां दुःखं धनसमर्पणात् ॥ ११५ ॥
भक्त्याऽर्थयति यो विप्रान् गुरून् देवांस्तथाऽर्चति ।
अर्चन्ते चरणौ यस्य मौलिरत्नांशुभिर्नृपाः ॥ ११६ ॥
बहु व्यययति द्रव्यं तदर्थं यो व्ययत्यरीन् ।
व्ययते यद्यशोबिम्बं त्रैलोक्यादर्पतां मतम् ॥११७॥

---

यशः कीर्तिः, रोदस्योः द्यावाभूम्योरन्तराले, क्षियति वसति क्षि वासे इत्यस्य तौदादिकस्य प्रयोगः । ११२ ।

शिष्टेषु साधुषु, द्रव्यं जोडयति प्रेरयति, प्रयुङ्क्ते इत्यर्थः । अत्युज्ज्वलतापघ्नान् अत्यन्तसन्तापघ्नान्, तान् विप्रान्, भक्त्येव जुडति बध्नाति । ११३ ।

विप्रार्थं ब्राह्मणभोजनार्थं, धनं अर्थं, राध्नोति सम्पादयति । श्रिया लक्ष्म्या, राध्यति सम्पन्नो भवति । ११४ ।

मोषति अपहरति । मुष्णाति छिनत्ति । अपहृताः अर्थाः धनानि येषां ते, तादृशानां जनानाम् । ११५ ।

मौलिषु किरीटेषु, 'मौलिः किरीटे धम्मिल्ले चूडाकङ्केलिभूरुहे' इति हैमः, यानि रत्नानि, तेषाम् अंशुभिः किरणैः, चूडामणिमरीचिभिरित्यर्थः, नृपाः चरणौ, अर्चन्ते पूजयन्ति । ११६ ।

बहु भूरि, द्रविणं धनम्, व्यययति उत्सृजति सत्पात्रेभ्यो ददातीत्यर्थः ।

विचारयति यो धर्म्मं विद्वद्भिर्ब्राह्मणैः सह ।
विचारयत्यस्य लोके शरच्चन्द्रोज्ज्वलं यशः ॥ १२५ ॥
अविद्यानिद्रयाक्रान्ते जगत्येकः स चेतति ।
धिया चेतयते सर्व्वं परस्य हृदये स्थितम् ॥ १२६ ॥
यो भुजाभ्यां भुवो भारं भरते भरतोपमः ।
बिभर्त्ति च यशोराशिं भूयांसं यस्य भूरपि ॥ १२७ ॥
यस्य रोषारुणा दृष्टिर्धावते यत्र मानवे ।
पाशपाणिस्ततस्तस्मिन् यमदूतोऽभिधावति ॥ १२८ ॥
शास्त्रेण क्षोभते भूयो लघुप्रकृतिको नरः ।
न क्षुभ्नाति महात्माऽसौ न क्षुभ्नोत्यचलस्ततः ॥ १२९ ॥
प्राणिङ्क्ते दक्षिणीयानां विप्राणाञ्चरणेषु यः ।
यत्पादौ मौलिरत्नांशुजालैर्नेनेक्ति राजकम् ॥१३०॥

अविद्या अज्ञानं, सैव निद्रा चैतन्यनिमीलनात् निद्रास्वरूपिणीत्यर्थः, तया आक्रान्ते अभिभूते जगति, एकः केवलः, स चेतति जागर्त्ति, ज्ञानचक्षुषा सर्व्वं पश्यतीत्यर्थः । १२६ ।

भरतोपमः दुष्मन्तात्मजभरतराजसदृशः, यद्वा मनुतुल्यः, यदुक्तं वायुपुराणे, 'भरणात् प्रजानां वै मनुर्भरत उच्यते । निरुक्तवचनाच्चैव वर्षं तद्भारतं स्मृतम् ॥' इति । भरते धारयति । १२७ ।

यस्य राज्ञः, रोषारुणा क्रोधताम्रा, दृष्टिः यत्र मानवे मनुष्ये, धावते निपतति । पाशपाणिः रज्जुहस्तः, यमदूतः तस्मिन् मनुष्ये इति शेषः, अभिधावति, कुपितः सन्नयं रिपुकुलमुन्मूलयतीति भावः । १२८ ।

दक्षिणामर्हन्तीति दक्षिणीयाः, यज्ञे ऋत्विगादिरूपिणः महानुभवा इत्यर्थः, तेषां चरणैः पादैः, प्राणिङ्क्ते आत्मानं कुर्वाति । राजकं नृपसमूहः,

मृते भर्त्तरि दुःखार्त्ताः क्लिन्दन्ति यद्रिपुस्त्रियः ।
अजस्रमश्रुभिस्तासां क्लिद्यन्ति नयनानि च ॥ १११ ॥
न सन्नयति येनाऽपि सन्धिं जिगीषु नृपः ।
सन्धयति धनुष्येव योऽन्यकार्येषु सायकम् ॥ ११२ ॥
दोर्भ्यां यो जितवान् दर्पं अप्ययत्साप्यमेयवत् ।
अमनक्ति कामिनीनाञ्च दृष्ट्या मानमनङ्गवत् ॥ ११३ ॥
यश्च वेवेक्ति वेदान्तं शास्त्राभ्यासेन सर्वदा ।
विविनक्ति च शत्रूणामाजौ सकलकञ्च यः ॥ ११४ ॥
आप्याययन्ते यतः प्राप्य यज्ञभागान् दिवौकसः ।
प्रभूतधनसम्पत्तेराप्याययन्ते च यत्प्रजाः ॥ ११५ ॥

---

मौलिरत्नोज्ज्वलाभिः चूडामणिदीप्तिभिः, यस्य राज्ञः पादौ, नेनेक्ति प्रज्ज्वलति रञ्जयतीति भावः ॥ ११० ॥

क्लिन्दन्ति रुदन्ति । नयनानि क्लिद्यन्ति आर्द्राणि भवन्ति ॥ १११ ॥

सन्नयति सन्धिं करोति । सन्धयति योजयति । सायकं बाणम् ॥११२॥

आप्यमेयवत् समुद्रमिव, दोर्भ्यां बाहुभ्यां, जितवान् दर्पं शत्रूणां मदं, अप्ययति अपनयति, ततश्च सम्यग्जयेन रिपुकुलं निहन्तीति भावः । अनङ्गवत् कन्दर्प इव, अतिशयीभूतोऽसौ ईप्सितः स राजा, दृष्ट्या आलोकेनैव, कामिनीनां मानं प्रणयेर्ष्यादिजनितरोषं, अमनक्ति निराकरोति ॥ ११३ ॥

आजौ युद्धे, शत्रूणां सकलं सर्वसैन्यं, रथीयोधगणादिः, विविनक्ति पृथक्करोति ॥ ११४ ॥

दिवम् ओकः स्थानं येषां ते दिवौकसः देवाः, दिवं स्वर्गोऽस्त्येषां चैव नित्यः । ओः ओक इति पदे पृषोदरादित्वात् साधुः । यतः यस्मात् राज्ञः, यज्ञभागान् प्राप्य, आप्याययन्ते प्रीयन्ते ॥ ११५ ॥

मिलन्ति प्रत्यहं यस्य वाजिवारणसम्पदः।
मीलन्ति रिपुनारीणां मुखपद्मवनानि च ॥ १४५ ॥
यस्य व्याघोटते दक्षो नाकनाथैः कृतव्रत।
व्याघुटन्ति विपक्षाश्च यत्सम्मुखमुपागताः ॥ १४६ ॥
यो वाग्मी वादिनां मध्ये वाचस्पतिः प्रपद्यते।
प्रपञ्चयन्ति यत्कीर्तिं दिङ्मुखेषु महाजनाः ॥ १४७ ॥
यस्य न्यायार्जितैर्वित्तैः पूज्यमाना दिने दिने।
तुष्यन्ति ब्राह्मणा नित्यं तृप्यन्ति कुलदेवताः ॥ १४८ ॥
मनो मोहिञ्जते यस्य दृढतोऽधर्मवर्जितम्।
उद्विजन्ति च संसारादसाराद्ब्रह्मवेदिनः ॥ १४९ ॥
भेदते न परं कञ्चित् स्वामी यः समदर्शनः।
तं निन्दति परीवादं परस्य विदधाति यः ॥ १५० ॥

---

वाजिनो घोटकाः, वारणाः करिणः, सम्पदो धनरत्नानि च, यद्वा वाजि-वारणरूपाः सम्पदः। मिलन्ति एकत्र संहता भवन्ति ॥ १४५ ॥

यस्य राज्ञः, दक्षः चतुरार्थैः विपक्षः सन्, न व्याघोटते प्रत्यावर्तते, यत्-प्रणीतं दण्डं न कोऽप्यतिवर्ततइत्यर्थः। व्याघुटन्ति पलायन्ते ॥ १४६ ॥

प्रपद्यते विजृम्भतीति उदीरयतीति यावत्। प्रपञ्चयन्ति कीर्तयन्ति ॥ १४७ ॥

कुलदेवताः गृहदेवताः, 'कुलाधीशमये गोत्रे गृहेऽपि कथितं कुलम्' इति विश्वः ॥ १४८ ॥

उद्विजन्ति विरज्यन्ते। ब्रह्मवेदिनः ब्रह्मज्ञानसम्पन्नाः ॥ १४९ ॥

भेदते निन्दति, भिद निन्दायामित्यस्य भौवादिकस्य प्रयोगः। समदर्शनः सर्वत्र समदृष्टिः, विचाराविचारादि यत्र वित्तः परीबैतिभेदरहितइति यावत्।

पितॄन् पूरयति श्राद्धे हव्यकव्यैश्च यः सदा ।
पूर्यन्ते पितरस्तस्य प्रसादैरुदितोदितम् ॥ १५१ ॥
न प्रगल्भायते मिथ्यावचनैर्यः कदाचन ।
वाजी प्रगल्भते दोर्भ्यां द्विषां विघटयन् घटाः ॥१५२ ॥
प्रकाशते यथा व्योम्नि चन्द्रः संपूर्णमण्डलः ।
प्रकाश्यते तथा भूमौ प्रजानां नयनोत्सवः ॥ १५३ ॥
यज्ञस्थाऽन्ते द्विजातिभ्यो दातुं क्षम्यति यो धनं ।
चैत्यदेवकुलव्याजाद्यशस्तर्पयतीव यः ॥ १५४ ॥
विनाऽपराधमारब्धान् न चेटति मृगानसौ ।
चेटयत्यरिवीरांश्च संग्रामरसिकान् नृपः ॥ १५५ ॥

---

परीवादम् अपवादम् । १५० ।

उदितोदितं शास्त्रं पठितमिति यावत् । १५१ ।

वाजी युद्धे, द्विषां रिपूणां घटाः समूहान्, विघटयन् विश्लेषयन्, प्रगल्भते प्रभुत्वाभिमानमाविष्करोति । १५२ ।

नयनोत्सवः नयनानन्दकरः । प्रकाश्यते विभाति । १५३ ।

चैत्यदेवकुलव्याजादिति । चैत्येषु देवागारेषु यानि देवकुलानि प्रतिष्ठितदेवरूपाणि, तद्व्याजात् तदपदेशेन, यद्वा, चैत्यानि यज्ञस्थानानि, देवकुलानि देवगृहाणि, तद्व्याजात्, सजातीयत्वे चैत्ये यज्ञेऽपि कथितं कुलमिति चित्रः । यशः कीर्त्तिं, तर्पयति प्रीणयति, यज्ञदेवप्रतिष्ठाद्यपदानैर्महतीं कीर्त्तिमर्जयतीति भावः । १५४ ।

विनाऽपराधमित्यादिनाऽस्य अवश्याचरणराहित्यं निषेधितम्, तथाचोक्तं, 'वर्जयेत सुरापानं अथवा वर्जयेत् वधा' इति । चेटयति उच्चाटयतीत्यर्थः । १५५ ।

विश्राणयति यः श्रीमान् विप्रेभ्यो विपुलं वसु ।
विश्रणन्ति च तेऽप्यस्मै सततञ्चाशिषः सदाशिषः ॥ १७० ॥
व्यायामरूढदेहोऽपि मन्दते यो न सुन्दरः ।
मन्दायते क्वचित् कार्य्ये प्राकृते च न कर्हिचित् ॥ १७१ ॥
अपमृत्युं परित्यज्य सुखं प्राणिति यत्प्रजा ।
न प्राण्यते पुरं तस्य प्रतिकूलं करोति यः ॥ १७२ ॥
यो न लुभ्यति पूर्व्वेषां स्थितिं राज्ञां तदानने ।
पातुं लुभ्यति लावण्यं नेत्राञ्जलिपुटेन यः ॥ १७३ ॥
दधते यः सदाचारं सदाचारैश्च संस्तुतः ।
दधते शासनं यस्य शिरसा च नरेश्वराः ॥ १७४ ॥

---

वसु धनं, 'वसु तोये धने मणौ' इति वैजयन्ती। विश्राणयति इत्यादि, 'त्यागो वितरणं दानमुत्सर्जनविसर्जने । विश्राणनं वितरणम्' इत्यमरः । आशिषः आशीर्वादान्, विश्रणन्ति ददति । सततचशब्देन तेषामाशिषाम् अमोघत्वं सूचितम् । १७० ।

मन्दायते अलसो भवति । मन्दशब्दात् भृशादित्वात् क्यङ् । १७१ ।

प्राणिति जीवति । यस्य प्रतिकूलं करोति विपक्षमाचरति, तस्य राज्ञः, पुरं नगरं, न प्राण्यते जीवति, रिपुपुरं अजस्रात् करोतीति भावः । १७२ ।

पूर्व्वेषां राज्ञां इक्ष्वाकुप्रभृतीनां, स्थितिं मर्य्यादां व्यवस्थितिमिति यावत्, तदानने तस्य मुखे, न लुभ्यति उच्छिनत्ति, प्राक्तनादिराजकथानुसारवतीत्यर्थः । यद्वा, प्राचीनराजवंशाधिकारम् उच्छेत्तुं न वाञ्छति । लावण्यं सौन्दर्य्यं, एतदीयं वनितेति यावत्, पातुम् आस्वादयितुं द्रष्टुं, लुभ्यति उत्सुकीभवति । १७३ ।

सदाचारैश्च साधवः पण्डितैश्च आचारवद्भिः, यद्वा, राजधर्म्मानुमोदितैश्च

यो न वञ्चयते किञ्चित् सदा सत्यपरायणः ।
वञ्चन्ति च शरच्चन्द्रं शुचयो दिक्षु तद्गुणाः ॥ १७९ ॥
होमाग्निधूमसुरभिः पवते मारुतो मृदुः ।
गोदावरीतरङ्गार्द्रः पुनाति भुवि यत्प्रजाः ॥ १८० ॥
यो मिमीते च मीमांसां तदर्थमनुतिष्ठति ।
पशवोऽपि न मीमन्ति यद्देशे दुःखपीड़िताः ॥ १८१ ॥
सुखं क्षपति शालेयमिक्षुक्षेत्रञ्च कर्षति ।
यत्प्रसादादविज्ञातक्लेशो जनपदः सदा ॥ १८२ ॥
मीवन्ते शीकरैः सर्व्वे वायवो दधिपोदधेः ।
चन्द्रावतीतरङ्गाढ्याः मीवयन्ति च यद्वपुः ॥ १८३ ॥

---

वञ्चयते प्रतारयति । वञ्चन्ति गच्छन्ति, सादृश्येन प्राप्नुवन्तीत्यर्थः । शुचयो-निर्म्मलाः । १७९ ।

मीमांसा नाम विचारपूर्व्वकतत्त्वनिर्णायकः ग्रन्थभेदः । मीमांसा च द्विविधा कर्म्ममीमांसा ब्रह्ममीमांसा चेति । कर्म्मकाण्डवेदविचारग्रन्थः कर्म्ममीमांसा जैमिनिप्रणीता, सैव मीमांसात्वेन प्रसिद्धा पूर्व्वमीमांसा इत्युच्यते । ब्रह्मकाण्ड-वेदविचारग्रन्थश्च ब्रह्ममीमांसा वेदव्यासादिप्रणीता, सा वेदान्तत्वेन प्रसिद्धा उत्तरमीमांसा इत्युच्यते । मिमीते प्रचारयति । तदर्थं मीमांसोदितकर्म्मादि अनुतिष्ठति सम्पादयति । मीमन्ति शब्दायन्ते आर्त्तनादं कुर्व्वन्तीत्यर्थः । १८१ ।

शालेयं धान्यक्षेत्रम् । जनपदो देशः, देशवासी जनसमूह इति यावत् । १८२ ।

सर्व्वे वायवः, दधिपोदधेः दधिसमुद्रस्य, शीकरैः जलकणाभिः, मीवन्ते स्थूला भवन्ति, मीव स्थौल्ये इत्यस्य प्रयोगः । चन्द्रावतीतरङ्गाढ्याः चन्द्रावती-नदीविशेषस्तस्याः तरङ्गाढ्याः, वायव इति शेषः, यद्वपुर्यस्य राज्ञः शरीरं, मीवयन्ति स्थूलयन्ति । १८३ ।

अमन्ति व्याधयोऽप्येनं न कदाचिद्भयादिव ।
आमयन्ति यमन्यञ्च तमुल्लाघं करोत्यसौ ॥ १९० ॥
वेवेष्टि पिष्टपं सर्व्वं कीर्त्तिर्यस्यातिशायिनी ।
विष्याति विषवत् प्राणान् त्रयीधर्म्मद्विषामसौ ॥१९१॥
निःशेषं शेषति क्रोधात् प्रतिपक्षक्षमापतीन् ।
एकः शेषति योऽशेषभूतानां भरणे ध्रुवम् ॥ १९२ ॥
क्षिपति प्रतिपक्षाणां हृदये यो भयं ध्रुवम् ।
क्षिप्यति श्रोत्रियाणाञ्च निष्कं पुष्कलमालये ॥ १९३ ॥

भवन्ति । १८९ ।

व्याधयो रोगाः, एनं राजानं, न अमन्ति गच्छन्ति अभिभवन्तीति यावत् । यम् अन्यञ्च जनम्, आमयन्ति पीडयन्ति, व्याधय इत्यनुषङ्गः । असौ राजा, तं व्याधितं जनम्, उल्लाघम् अतिक्रमणीयं व्याधिनिर्मुक्तमितिभावः, करोति ॥ १९० ॥

यस्य राज्ञः, अतिशायिनी सर्व्वातिरिक्ता, असाधारणेत्यर्थः, कीर्त्तिः, पिष्टपं भुवनं, वेवेष्टि व्याप्नोति । ह्वादिगणीयस्य विषधातोः प्रयोगः । असौ राजा, त्रयीधर्म्मद्विषां वेदत्रयीविहितधर्म्मविघातकानां, प्राणान्, विषवत् विषमिव, विष्याति वियोजयति संहरतीति यावत् । १९१ ।

प्रतिपक्षक्षमापतीन् प्रतिकूलान् राज्ञः, निःशेषं शेषति समूलम् उन्मूलयति । एकः अन्यसाहाय्यनिरपेक्ष इत्यर्थः, अशेषभूतानां निखिलप्रजानां, भरणे, शेषति शेषत्वमाचरति । यथा एक एव अनन्तः सकलधराभारं बिभर्त्ति तथा सोऽपि राजेतिभावः । १९२ ।

श्रोत्रियाणां छान्दसानाम्, आलये गृहे, पुष्कलं प्रचुरं, श्रेष्ठं वा, यद्वा चतुः-षष्टिमुष्टिपरिमितं, यदुक्तं,—'अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम्' इति । निष्कं सुवर्णं, क्षिप्यति ददाति । १९३ ।

सुखं निंस्ते सुखं लोकाः यत्प्रजा प्रतिपालिता ।
निंक्षति स्तनकक्षोरुकपोलाधिगलादिकम् ॥ १९९ ॥
दृष्ट्वैव यं विघटते कोपाक्षेपो मृगीदृशाम् ।
विचाटयति चास्फोटे वैरिणां करिणां घटा ॥२००॥
निस्तनन्ति न दुःखार्त्तास्तद्देशे निरुपद्रवे ।
स्तनयत्युग्रशब्देन पर्जन्योऽपि न भीतवत् ॥ २०१ ॥
रसन्ति मधुरैः कण्ठैर्यस्योद्याने पतत्त्रिणः ।
रसयन्ति सुखाद्यानि तत्करप्रतिपालिताः ॥ २०२ ॥
लज्जते लल्लिकाग्रे यश्चिरश्रोत्रियोऽप्यसौ ।
लज्जते लल्लिकानाञ्च वार्त्ता कर्णगता पुनः ॥ २०३ ॥

कुटुम्बकम्' इति भावः । लम्भयते इति ह्रस्वः सम्पूर्व्वकत्वात् आत्मनेपदं, विव-क्षावशादकर्मकत्वञ्च । १९८ ।

निंस्ते चुम्बति, निन्सधातोः प्रयोगः । निंक्षति चुम्बति ॥ १९९ ।

मृगीदृशां हरिणनयनानां, कोपाक्षेपः मानाख्यकोपकृतं तर्ज्जनं, विघटते अपसरति । आस्फोटे यस्य बाहुशब्दे सति, वैरिणां करिणां घटा निपतनगज-समूहः, विचाटयति पलायते । २०० ।

निस्तनन्ति नदन्ति आर्त्तनादं कुर्व्वन्तीत्यर्थः । स्तनयति गर्ज्जति । पर्ज्जन्यः मेघः । भीतवत् राजदण्डभयेन शङ्कितइव । २०१ ।

पतत्त्रिणः पक्षिणः, मधुरैः श्रोत्राभिरामैः, कण्ठैः, रसन्ति कूजन्ति । तत्करप्रतिपालिताः सर्व्वे जनाः, सुखाद्यानि सुमिष्टपानभोजनानि, रस-यन्ति आस्वादयन्ति । 'भक्ष्याणि तत्करप्रतिपालिताः' इत्यादर्शपुस्तकपाठो न समञ्जसः । २०२ ।

लल्लिका वेश्या, तस्याग्रे तत्संसर्गे । लल्लिकानां वेश्यानां, वार्त्ता संवादः,

यत्र लम्बयति व्यूहं प्रतिपक्षक्षमाभुजि ।
लभतेऽर्थं ततो भूमिं हेमहस्तिहयादिकम् ॥ २०८ ॥
श्रियं दृष्ट्वाऽपि यद्भूतां न प्रहर्षति यस्तथा ।
यथा प्रहृष्यति श्रुत्वा सत्कवीनां सुभाषितम् ॥२०९॥
धर्म्मे सर्व्वस्वदानेऽपि यस्य ह्रीणायते न धीः ।
ह्रीणयत्यरिवर्गस्य जीविताशाश्च यः सदा ॥ २१० ॥
वाहते वाहिनीं हन्तुं बाहुभ्यामाहवेषु यः ।
वहते विहतारातिर्बहुरूपस्य यः श्रियम् ॥ २११ ॥
खेदते यस्य सर्व्वोऽपि वपुषा नोष्णरश्मितः ।
न च स्विद्यति तस्याऽङ्गं व्यायामार्जितमेदसः ॥ २१२ ॥

---

यत्र प्रतिपक्षक्षमाभुजि शत्रुभूपाले, व्यूहं सुरचितं सैन्यं, लम्बयति लम्बमानं प्रलम्बमानं प्रेरयति, एकदोच्चाटनकारि सैन्यं प्रेरयतीत्यर्थः। ततः प्रतिपक्षात् राज्ञ इत्यर्थः। लम्बयतीति प्रेरणार्थे णिजन्तस्य लम्ब शब्दे इत्यस्य प्रयोगः। २०८।

सर्व्वस्वस्य दानं यत्र तादृशेऽपि धर्म्मे सर्व्वस्वदक्षिणे विश्वजिदादौ यज्ञे, यस्य धीः बुद्धिः, न ह्रीणायते ह्रीणेव आचरति, सर्व्वस्वं ददामि न वेति चिन्ताकुला न भवतीत्यर्थः, यथातथैव मनसा सर्व्वस्वमुत्सृजतीति भावः। २१०।

वाहिनीं सेनां। वाहते प्रयतते, वाहृ प्रयत्ने इत्यस्य प्रयोगः। विहतारातिः विनाशितशत्रुः, यो राजा, बहुरूपस्य विष्णोः, श्रियं सम्पदं, वैकुण्ठतुल्यभां वहतीत्यर्थः, यद्वा, बहुरूपस्य वासुदेवस्य श्रियं शोभां रूपमिति यावत्, वहते धारयति। २११।

सर्व्वमेव वपुषा शरीरेण, उष्णरश्मितः सूर्य्यात्, आतपतापादित्यर्थः, खेदते घर्म्माक्तदेहो भवति। स्विद्यति घर्म्माक्तं भवति। २१२।

शमन्ति यद्वियोगेन सीमन्तिन्यः स्मरातुराः।
यः सामयति सामज्ञः स्निग्धैरालोकनैव ताः ॥२२३॥

हिताहितं प्रजानां यः प्रेक्षते नित्यमात्मना।
प्रेक्षयत्यखिलानाञ्च कार्य्यसिद्धिं नियोगिनाम् ॥२२४॥

अभिलष्यति साधूनामुदयं सर्व्वतोदयः।
साधुलोकोऽपि निःसीमां तस्याऽभिलषते श्रियम् ॥२२५॥

कायः क्लाम्यति नाक्रन्दे यस्य प्रहरतो रिपून्।
क्लामन्ति रिपुसैन्याश्च प्रवमाना दिशो दश ॥ २२६ ॥

यः स्वप्नेनाऽपि नात्मीयं गुणं कुत्राऽपि कत्थते।
कथयत्यादिराजानां चरितानि सहस्रशः ॥ २२७ ॥

---

चुरादिगणीयस्य प्रयोगः ॥ २२२ ॥

यद्वियोगे यस्य राज्ञः विरहे, सीमन्तिन्यः कामिन्यः स्मरातुराः कामपीडिताः सत्यः, शमन्ति खिन्नाः भवन्ति। शम वैकल्ये इत्यस्य प्रयोगः। सामज्ञः प्रियवचनरचनाचतुरः, मानिनीमानविघातदक्षइतिभावः, यदुक्तं साहित्यदर्पणे, 'तच प्रियवचः साम' इति। स्निग्धैः मधुरैः, आलोकनैः वीक्षितैः, ताः विरहातुराः सीमन्तिनीः, सामयति सान्त्वयति। साम सान्त्वने इत्यस्य प्रयोगः ॥२२३॥ आत्मना स्वयम्। नियोगिनां रक्षादिकार्य्ये नियुक्तानाम् ॥ २२४ ॥

आक्रन्दे दारुणयुद्धे, 'आक्रन्दः क्रन्दने त्राणे मित्रदारुणयुद्धयोरिति मेदिनी। रिपून् शत्रून्, प्रहरतः निघ्नतः, यस्य राज्ञः, कायः शरीरं, न क्लाम्यति क्लान्तीभवति। प्रवमानाः पलायमानाः ॥ २२६ ॥

कत्थते श्लाघते प्रशंसतीति यावत्। कथयति कीर्त्तयति। कत्थते इति कत्थ श्लाघायामित्यस्य प्रयोगः ॥ २२७ ॥

व्यनक्ति यच्छरीरस्थं लक्षणं सार्व्वभौमताम्।
व्यञ्जयन्ति च गोदानं यद्गेहे याज्ञिका द्विजाः ॥२२८॥
आखोटन्ति नखैरङ्गं सुखमाखोटयन्ति च।
यद्व्यूहकृतवैधव्या रुदत्योऽरिकुलस्त्रियः ॥ २२९ ॥
सम्पाशयति यः शत्रून् शृङ्खलैरखिलानपि।
विपाशयति चात्मानं ज्ञानं कर्म्मक्षयं नयन् ॥२३०॥
घूर्णते माधवस्याऽपि यद्गुणश्रवणाच्छिरः।
मित्रोदासीनभूतानां घुणतीति किमद्भुतम् ॥२३१॥

---

सार्व्वभौमता चक्रवर्त्तिता, व्यनक्ति सूचयति, चक्रवर्त्तिलक्षणोपेतोऽसौ राजा इति भावः। याज्ञिकाः यज्ञशीलाः, द्विजाः ब्राह्मणाः, गोदानं केशान्तनामकसंस्कारं, यद्वा यज्ञे धेनुदानरूपं कर्म्म, व्यञ्जयन्ति द्योतयन्ति, यथाशास्त्रं सम्पादयन्तीत्यर्थः। २२८ ॥

नखैः नखाघातैः, अङ्गं शरीरं, आखोटन्ति, छिन्दन्ति, शोकोन्मत्ततयेति भावः। सुखम् आखोटयन्ति विनाशयन्ति। यस्य व्यूहेन सुरचितेन सैन्येन कृतं वैधव्यं विधवायाः गतभर्त्तृकायाः भावः, पतिविनाश इत्यर्थः, यासां ताः, अतएव रुदत्यः विलपनपराः। २२९।

सम्पाशयति बध्नाति। पश बन्धने इत्यस्य सम्पूर्व्वस्य प्रयोगः। आत्मानं जीवात्मानं, कर्म्मक्षयं शुभाशुभकर्म्मविनाशजन्यं, ज्ञानम् आत्मज्ञानमित्यर्थः, नयन् प्रापयन्, विपाशयति भवपाशात् मोचयति, आत्मानमिति शेषः। २३०।

माधवस्य मधुसूदनस्य। मित्रोदासीनभूतानामिति। कस्यचित् राज्ञः स्वराज्यसीमानन्तरमेव यस्य राज्यं स तस्य अरिः, तदनन्तरं तु यस्य राज्यं स प्रथमस्य मित्रम्। उदासीनभूतस्तु शत्रुमित्राभ्यां परतरो राजा, विजिगीषोः शत्रुमित्रभूमितो व्यवहितः, व्यवहितत्वादेव नोपकारी नाप्यपकारी केवलं सुहृदासीन इव, तेषां शिरो मूर्द्धा, घुणति भ्रमति। २३१।

यस्य लक्ष्मीर्विलसति प्रजा धर्म्मेण रक्षितुः ।
विकाशन्ते च भूयांसो गुणाः श्रवणचारिणः ॥ २१२ ॥
खेलन्ति बालकाः कामं क्रीडन्ति स्थविरा अपि ।
अज्ञातव्याधिदौर्गत्यविप्लवा यस्य मण्डले ॥ २१३ ॥
यः कूटयति अखर्वां दृप्तां गजघटां रणे ।
संकुटन्ति भयाक्रान्ताः अरयो यस्य दर्शनात् ॥ २१४ ॥
कृपते कृपणेष्वेव कृपाणार्जितविक्रमः ।
प्रचुरं अर्थितोऽप्यर्थं नाऽसौ कृपयति प्रभुः ॥ २१५ ॥

धर्म्मेण राजधर्म्मं पुरस्कृत्य, प्रजाः प्रकृतीः, रक्षितुः पालयितुः, यस्य राज्ञः, लक्ष्मीः राजश्रीः, विलसति नितरां प्रकाशते वर्त्तत इति यावत्। श्रवणचारिणः कर्णमधुराः गुणाः दयादाक्षिण्यादयः, विकाशन्ते शोभन्ते। रक्षितुरित्यत्र रक्षिता इत्यादर्शपुस्तकपाठो न साधुः । २१२ ।

स्थविराः वृद्धाः। व्याधिः रोगः, दौर्गत्यं दारिद्र्यादिदुःखं, विप्लवः परचक्रपति-राष्ट्रादितो भयं स्वराष्ट्रोपद्रवो वा, ते अज्ञाताः अननुभूताः यैः, ते तादृशाः। मण्डले सुविस्तृते राज्ये । २१३ ।

गजघटाः करिसमूहान्, कूटयति दहति विनाशयतीति यावत्। संकुटन्ति भयेन आकुञ्चितदेहा भवन्ति । २१४ ।

कृपणेषु कृपापात्रेषु अर्थिषु, कृपते दयते, कृपां प्रदर्शयतीति यावत्। कृपाणेन खड्गेन शौर्यसम्पदेतिभावः, अर्जितः विक्रमः पराक्रमः येन सः, भुजबलजन्यप्रतापसमर्थः। कृपयति दुर्बलो भवति। प्रचुरमपि अर्थं दातुमितिशेषः। 'कृपाणार्जितविक्रमः' इत्यत्र 'कृपणार्जितविक्रमः' इति आदर्शपुस्तकपाठो न साधुः । २१५ ।

अजस्रमम्बुभिः शत्रुस्त्रीणां धौतमिवाधिकम्।
यद्यशः श्वेतते दिक्षु श्विन्दते च सुरालये ॥ २३६॥
कुशस्थलं पल्ययति पथयत्युत्तरापथम्।
यत्खड्गखण्डिताशेषप्रचण्डरिपुमण्डलम् ॥ २३७ ॥
ह्रादते स्निग्धगम्भीरं यद्देशे वर्षुको घनः।
ह्लादते यस्य लोभेन कृषीवलजनोऽप्यरम् ॥ २३८ ॥
ज्योत्स्नाच्छलेन मूर्च्छन्ति यद्गुणाः शशलाञ्छने।
न तं स्फूर्च्छति यत्रासौ तुष्टः सहृदयः प्रभुः ॥ २३९ ॥
द्रुणोति द्रोणवद्युद्धे शरजालेन यो रिपून्।
द्रूणाति भङ्गतो यस्य दिङ्मुखेषु रिपुव्रजः ॥ २४० ॥

---

अधिकम् अधिकतरं, श्वेतते शुक्लं भवति, यतः एकस्यापि यशसो रिपुनारीनयनजलक्षालितत्वात् श्वैत्याधिक्यं ज्ञेयम्। श्विन्दते श्वेतं भवति। श्वितश्विन्द्योः श्वैत्यार्थयोः प्रयोगः ।२३६।

कुशस्थलं कान्यकुब्जदेशम्। उत्तरापथम् उत्तरदिग्भागम्। पल्ययति पथयति चेति गच्छतीत्यर्थः, तत्र तत्र पलायत इति भावः। २३७।

वर्षुकः वर्षणशीलः, लषपतपदेत्यादिना उकञ्प्रत्ययः। घनो मेघः, स्निग्धगम्भीरं यथा स्यात् तथा ह्रादते गर्जति। कृषिरस्यास्तीति कृषीवलः, कर्षक इत्यर्थः, रजःकृष्यादिना वलच्प्रत्ययः, वल इति दीर्घः। ह्लादते आह्लादितो भवति। २३८।

सहृदयः सामाजिकः गुणग्राहीत्यर्थः, असौ प्रभुः राजा, यत्र यस्मिन् जने, तुष्टः, योऽस्य प्रीतिकरं सत्कर्म करोतीत्यर्थः, तं जनं, न स्फूर्च्छति विस्मरति ।२३९।

द्रोणवत् द्रोणाचार्यवत्, शरजालेन बाणसमूहेन, रिपून् द्रुणोति उपतापयति। रिपुव्रजः शत्रुसमूहः, दिङ्मुखेषु दिगन्तरेषु, द्रूणाति गच्छति

लक्ष्मीमालिङ्गति स्नेहाद् यः सदा धरणीपतिः।
आलिङ्गयति रत्नांशुजालैर्मणिकुट्टिमम् ॥ २४१ ॥
रथान् सवति संग्रामे स्वयमेव जवेन यः।
सोमं सुनोति यज्ञेषु परलोकजिगीषया ॥ २४२ ॥
मनो मादयते यस्य योगाभ्यासरसायनम्।
सर्व्वलोकातिशायिन्या विभूत्या च न माद्यति ॥२४३॥
खिद्यति चातिवर्गेषु खेदयत्यात्मबन्धुषु।
रणे शूरयते यश्च शूर्य्यते विद्विषां बलम् ॥ २४४ ॥
यः शीलति सदा धर्म्मं शीलयत्यात्मनो हितम्।
न च श्रमति शोकेन न च दुःखेन ताम्यति ॥ २४५ ॥

---

पलायत इत्यर्थः। २४०।

मणिकुट्टिमं मणिमयबद्धभूमिं, रत्नांशुजालैः रत्नमरीचिभिः, आलिङ्गयति रञ्जयति। २४१।

संग्रामे युद्धे, रथान् सवति प्रेरयति। षु प्रेरणे इत्यस्य प्रयोगः। परलोकजिगीषया स्वर्गकामनया, यज्ञेषु सोमं यज्ञाङ्गभूतां सोमलतां, सुनोति निष्पीडयति, यज्ञे सोमलतां निष्पीड्य तद्रसं पिबतीत्यर्थः। षु अभिषवे इत्यस्य स्वादिगणीयस्य प्रयोगः। २४२।

योगाभ्यासरसायनं ब्रह्मानुसन्धानरूपं, महौषधं, यस्य मनः मादयते आनन्दयति। सर्व्वलोकातिशायिन्या लोकोत्तरया, विभूत्या सम्पदा, न माद्यति मत्तोभवति। २४३।

रणे युद्धे, शूरयते पराक्रमते। विद्विषां शत्रूणां बलं सैन्यं, शूर्य्यते विनाशयति। २४४।

धर्म्मं शीलति अभ्यस्यति आलोचयतीति यावत्। शोकेन इष्टनाशादि-

छिनत्ति निम्नगामानं छेदयत्यहितोदयम् ।
ऋध्नोति धीः सदा यस्य ऋध्यति श्रीव भूतले ॥२४६॥
यः क्षेपति सतां मार्गं गवेषयति सत्क्रियाम् ।
यत् किञ्चिदप्यधीतेऽसौ यदध्येति तदक्षयम् ॥ २४७ ॥
आलोचते सदा नीतिमालोचयति सत्क्रियाम् ।
आलोकन्ते यमवला नालोकयति यस्तु ताः ॥ २४८ ॥
यो न कुत्सयते कुत्सां न तु कुत्सति निर्धनम् ।
न भर्त्सयति धर्मिष्ठान् न तु भर्त्सयते परान् ॥२४९॥
मण्डयन्ति गुणाः सर्वे यो गुणानेव मण्डति ।
भूषणं भूषयत्यन्यं यस्तु भूषति भूषणम् ॥ २५० ॥
उन्मूलयति यः शत्रूनुन्मूलति तमांसि च ।
राष्ट्रं पीडति नात्मीयं पीडयत्यरिमण्डलम् ॥ २५१ ॥

छेदेन, न समति विजयी न भवति, यस द्वैध्ये इत्यस्य प्रयोगः । २४५ ।

धीः बुद्धिः, ऋध्नोति वर्द्धते । श्रीव राजलक्ष्मीव ऋध्यति वर्द्धते । ऋध वृद्धौ इत्यस्य प्रयोगः । २४६ ।

सतां मार्गं सदाचारपद्धतिं, क्षेपते अवलम्बते । गवेषयति अन्वेषयति । गवेष अन्वेषणे इत्यस्य चुरादिगणीयस्य प्रयोगः । २४७ ।

मण्डयन्तीत्यादि । गुणाः शौर्य्यवीर्य्यदयादाक्षिण्यादयः, सर्वे जनं, मण्डयन्ति भूषयन्ति । यो राजा गुणानेव मण्डति भूषयति, गुणाः सर्वेषां उत्कर्षहेतवोऽपि तत्र आधारगुणेन स्वयमेव उत्कर्षं लभन्ते इत्यर्थः । एवं यस्तु भूषणमपि भूषति अलङ्करोतीत्यर्थः । 'अलङ्करणेष्वप्यलङ्कार' इति कुमारः । २५० ।

निवर्हयति बुद्ध्याऽरीन् तपसा यो निवर्हते ।
इहाऽर्हति च यः पूजां युद्धेऽपीन्द्रस्तमर्हति ॥२५२॥
भक्त्या नमति यो देवान् नमस्यति गुरून् द्विजान् ।
व्यश्नोति रोदसी कीर्त्या स्वधर्ममनुरुध्यते ॥ २५३ ॥
दिवा निद्रायते नाऽसौ न निद्राति च सन्ध्ययोः ।
न गृध्यति परद्रव्यं न च गर्हयते परम् ॥ २५४ ॥
तूर्यते न क्वचित् कार्य्ये त्वरते धर्म्म एव यः ।
ध्वनन्ति यद्गुणान् मर्त्त्या ध्वनयन्ति च खेचराः ॥२५५॥
तर्जते यो हि भूपालान् न तर्जयति सज्जनम् ।
न दुनोति परं वाचा दुर्जनोक्त्या न दूयते ॥ २५६ ॥

---

बुद्ध्या नीतिशास्त्रानुसारिण्या प्रज्ञया, अरीन् शत्रून् निवर्हयति विनाशयति। तपसा तपोबलेन, निवर्हते दीप्यते। इह लोके, पूजाम् सम्मानम्, अर्हति भजति। युद्धे, इन्द्रोऽपि स्वयं देवराजोऽपि, तं राजानम्, अर्हति पूजयति ॥ २५२ ॥

कीर्त्या यशसा, रोदसी द्यावाभूमी, व्यश्नोति व्याप्नोति। स्वधर्मं प्रजापालनरूपं राजधर्मम्, अनुरुध्यते सर्वप्रयत्नेन रक्षति ॥ २५३ ॥

सन्ध्ययोः सायं प्रातश्च, यदुक्तं,—'त्रियामा रजनी प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम् । नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते ॥' इति। परद्रव्यं परधनं, न गृध्यति लब्धुमिच्छति ॥ २५४ ॥

तूर्यते त्वरते। ध्वनन्ति घोषयन्ति। मर्त्त्याः मानवाः। खेचराः नभोविहारिणः देवगन्धर्वादयः ॥ २५५ ॥

वाचा अप्रियवचनैर्व्यर्थैः, परं न दुनोति उपतापयति। दुर्जनोक्त्या दुर्जनवाक्येन च, न दूयते स्वयं दुःखितो न भवति ॥ २५६ ॥

न सूदते मतिर्यस्य यः सूदयति माधवम् ।
चिकित्सति जगद्व्याधिं साधु केतसयति प्रजाः ॥२५७॥
सत्यं सङ्गिरते यश्च गृणाति सुभगं वचः ।
यो भुङ्क्ते भुवनं धर्म्मे यस्य धीर्न भुजत्यलम् ॥ २५८ ॥
पतन्ति यद्विषो दिक्षु दुरितञ्च पलायते ।
जहाति दुर्जनैः सङ्गं जिहीते सज्जनाश्रयम् ॥ २५९ ॥
लिनाति धर्म्मएवाऽसौ नेन्द्रियार्थेषु लीयते ।
जायन्ते यस्य सत्पुत्रा जयन्ति च गुणोदयाः ॥ २६० ॥
यः पृथ्वीं पाति पायन्ति यत्प्रभावाच्च शत्रवः ।
चित्तं रज्यति नारीणां स्वयं ता अनुरज्यते ॥ २६१ ॥
रहत्यविदुषां सङ्गं रहयत्यप्रियं सदा ।
कीर्त्तिर्भ्राम्यति यस्योर्व्यां गुणाः स्वर्गे भ्रमन्ति च ॥२६२॥

---

यस्य मतिः बुद्धिः, न सूदते अक्षरति । माधवं रिपुकुलं, सूदयति विनाशयति ॥ २५७ ।

सत्यं सङ्गिरते प्रतिजानीते । सुभगं वचः मधुरं वाक्यं, गृणाति उदीरयति । धर्म्मे यस्य धीः बुद्धिः, न भुजति, कुटिला भवति, सरलात्मना धर्म्मं सेवते इत्यर्थः, भुज कौटिल्ये इत्यस्य तौदादिकस्य प्रयोगः । २५८ ।

यद्विषः यस्य शत्रवः, दिक्षु पतन्ति गच्छन्ति पलायन्त इत्यर्थः । दुरितं पापं पलायते अपसरति । सज्जनाश्रयं साधुसङ्गं, जिहीते प्राप्नोति । २५९ ।

पृथ्वीं धरणीं, पाति रक्षति । यत्प्रभावात् यस्य प्रतापेन, शत्रवः, पायन्ति शुष्यन्ति, अकर्म्मीका भवन्तीत्यर्थः । नारीणां चित्तं रज्यति तस्मिन् अनुरक्तं भवति ।२६१।

अविदुषां मूर्खाणां, सङ्गं संसर्गं, रहति परिहरति । अप्रियं रहयति अमङ्गलं निराकरोति । २६२ ।

मानं खण्डयति स्त्रीणां खण्डते द्विषतां शिरः।
मोषति द्विषत: सर्व्वान् मुष्णन्नपि च तत्पुरम् ॥२६३॥
चर्चापयति शास्त्राणि माऽधर्मं चर्चयतेऽन्यतः।
विभाजयति यो द्रव्यं सभाजयति सज्जनान् ॥२६४॥
लुभत्यर्थे च कामे च धर्मे लुभ्यति यः सदा।
वेदान् गदति विस्पष्टं नचाऽन्यं गद्यति क्वचित् ॥२६५॥
अश्नाति शुचिमाहारमश्नुते च परन्तपः।
इषते सर्व्वकार्य्येषु कुलं इषयते द्विषाम् ॥ २६६ ॥
श्रियं यचयते भक्त्या विभूत्या यच्च यचति।
यः खेटति सतां मध्ये स खोटति निराश्रयः ॥२६७॥
गाहते शास्त्रमत्यर्थं गाधते माऽधर्ममन्यतः।
योऽश्वे गुध्नाति तद्दुर्गं तत्क्षणादेव गुध्यति ॥२६८॥

---

सर्व्वान् द्विषत: शत्रून्, मोषति हरति। तत्पुरं शत्रुनगरं मुष्णाति हरति। २६३।

चर्चमाचष्टे इति णिचा चर्चापयति। चर्चयते याचते। सभाजयति, पूजयति, सभाज पूजायामित्यस्य चदन्तस्य चुरादिगणीयस्य प्रयोग:। २६४।

शुचिं पवित्रम्, आहारं भक्ष्यद्रव्यम्, अश्नाति भुङ्क्ते, 'शुचरीचितमश्नाय-मश्नात्यन्नैर्विनापरैः' इति मनुस्मरणात्। अश्नुते व्याप्नोति। २६६।

यचयते पूजयति यचति याचनमाचरति, कुबेरतुल्यविभवोऽसौ राजेति भावः। २६७।

गाधते इच्छति। यो जनः, अश्वे राज्ञे, गुध्नाति क्रुध्यति, तत्क्षणात् परिवञ्चितं, तद्दुर्गं गुध्यति वेष्टते। २६८।

एजते राजचिह्नैर्यः एजयत्यखिलं जगत्।
इन्धे युद्धेषु यत्तेजः एधते यः श्रियाऽधिकम्॥ २६९॥
यः स्फोटति सभामध्ये तं स्फेटति निरीक्ष्य यः।
प्रतिषेधति यः शत्रून् कार्य्यं तस्याशु सिध्यति॥२७०॥
नयन्ते यद्गुणाः सर्व्वं यस्तानयति दिङ्मुखम्।
श्रिया मृडति मृड्नाति सरस्वत्या च यः सदा॥ २७१॥

---

एजते शोभते। इन्धे दीप्यते। यः श्रिया लक्ष्म्या, अधिकम् एधते वर्द्धते। २६९॥

स्फोटति गर्व्वं प्रकाशयति। स्फेटति अवजानाति। प्रतिषेधति निवारयति। सिध्यति सम्पद्यते। २७०॥

श्रिया लक्ष्म्या, मृडति तुष्यति। सरस्वत्या विद्यया मृड्नाति आनन्दितो भवति। २७१॥

---

इतिसमासमवासगुणोदयं कविरहस्यमिदं रसिकप्रियम्।
सदभिधाननिधानहलायुधद्विजवरस्य कृतिः सुकृतार्थिनः॥

शुभमस्तु॥

